द्वित्वार्थमिदम्। पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकतां लब्धुं वा। 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये। समासवच्च बहुलम्' (वा ४७००)। बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्। 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः' (वा ४७००)। अन्योऽन्यं विप्रा नमन्ति। अन्योऽन्यौ। अन्योऽन्यान्। अन्योऽन्येन कृतम्। अन्योऽन्यस्मै दत्तमित्यादि। 'अन्योऽन्येषां पुष्करैरामृशन्तः' इति माघः। एवं परस्परम्। अत्र कस्कादित्वाद्विसर्गस्य सः। इतरेतरम्। इतरेतरेणेत्यादि। 'स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः (वा ४७०१)। अन्योन्याम्—

द्विर्वचनार्थं इदं वार्तिकमित्यर्थः। नन्वन्य भृशार्थ एव द्विर्वचनफलकत्वे 'भृशे च' इत्येव सिद्धे 'क्रियासमभिहारे' इति व्यर्थमित्यत आह। **पौनःपुन्येऽपीति** ॥ लुनीहि लुनीहीत्यत्र पौनःपुन्ये लोटो द्विर्वचनस्य च समुच्चयार्थमिति यावत्। अन्यथा लोटैव पौनःपुन्यस्य द्योतितत्वात्तत्र नित्यवीप्सयोर्द्विर्वचनस्य प्रवृत्तिर्न स्यादित्यर्थः। एवञ्च 'धातोरेकाचः' इति पौनःपुन्ये यङन्ते पापच्यते इत्यादौ द्विर्वचनमित्यन्यत्र विस्तरः। **कर्मव्यतिहारे इति** ॥ क्रियाविनिमयः कर्मव्यतिहारः, तस्मिन् गम्ये सर्वनाम्नो द्वे स्तः। ते च द्विरुक्ते पदे बहुळं समासवदित्यर्थः। अत्र 'बहुळम्' इति समासवदित्यत्रैवान्वेति। द्विर्वचनन्तु नित्यमेव। **अन्यपरयोरिति** ॥ अन्यशब्दपरशब्दयोरेव बहुळं समासवत्त्वम्। इतरशब्दस्य तु नित्यमेवेत्यर्थः। अत एव अन्यशब्दस्य समासवत्त्वरहितमेव इतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये दृश्यते। तथा 'परस्परोपपदाच्च' इति वार्तिकप्रयोगात् परशब्दस्यापि समासवत्त्वाभावो गम्यते इति भावः। एवञ्च क्रियासमभिहारे अन्यशब्दस्य परशब्दस्य च नित्यं द्विर्वचनम्। द्विरुक्तयोस्तु समासवत्त्वं बहुळम्। इतरशब्दस्य तु तदुभयमपि नित्यम्। एतत्त्रयव्यतिरिक्तसर्वनामशब्दस्य तु नेदं द्वित्वम्। बहुळग्रहणादिति स्थितिः। **असमासवद्भावे इति** ॥ इदमन्यपरशब्दयोरेव। इतरशब्दस्य समासवत्त्वस्यैवोक्तत्वात्। **सुपस्सुरिति** ॥ सुबिति प्रत्याहारः। सप्तानामपि विभक्तीनां पूर्वपदस्थानां प्रथमैकवचनं सु इत्यादेशो वाच्य इत्यर्थः। इदं द्वित्वादिविधानं प्रथमैकवचनमात्रविषयमिति केचित्। तदेतद्भाष्यविरुद्धम्। भाष्ये द्वितीयादिविभक्तेरुदाहृतत्वादित्यभिप्रेत्य द्वितीयादिविभक्तीरुदाहरति। **अन्योऽन्यं विप्राः नमन्तीत्यादि** ॥ इह अन्यम् अन्यौ इत्यादीनां द्वित्वे पूर्ववत्सुपः सुः। प्रथमैकवचनस्यैवेदं द्वित्वादीत्येतत् न कविसम्मतमित्याह। **अन्योऽन्येषामित्यादि माघः इत्यन्तम्** ॥ परस्परमित्यत्र विसर्गस्य सत्त्वापवादमुपध्मानीयमाशङ्क्य आह। **कस्कादित्वादित्यादि। इतरेतरमिति** ॥ इतरः इतरावित्यादीनां द्वित्वे समासवत्त्वात् सुपो लुकि समुदायात् पुनः सुबुत्पत्तिरिति भावः। **स्त्रीनपुंसकयोरिति** ॥ स्त्रीनपुंसकयोर्विद्यमानानाम् अन्यपरेतरपदानां कर्मव्यतिहारे द्वित्वे उत्तरपदस्थविभक्तेः आम् इत्यादेशो बहुळं वक्तव्यमित्यर्थः। **अन्योऽन्यामित्यादि** ॥ अन्योऽन्यां, अन्योऽन्यं

**अन्योन्यम् । परस्पराम्–परस्परम् । इतरेतराम्–इतरेतरं वा । इमे ब्राह्मण्यौ कुले वा भोजयतः । अत्र केचित् । आमादेशो द्वितीयाया एव । भाष्यादौ तथैवोदाहृतत्वात् । तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः । अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामादेशमाहुः ।**

**दलद्वये टाबभावः क्लीबे चादड्विरहः स्वमोः ।**
**समासे सोरलुक्चेति सिद्धं बाहुलकात्रयम् ॥**

वा इमे ब्राह्मण्यौ कुले वा भोजयतः, परस्परां परस्परं वा इमे ब्राह्मण्यौ कुले वा भोजयतः, इतरेतरां इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः इत्यन्वयः । तत्र अन्यामित्यस्य द्वित्वे दळद्वये टाबभाव इति वक्ष्यमाणतया पुंवत्त्वात् टापो निवृत्तौ समासत्वाभावात्सुपोऽलुकि पूर्वपदस्थविभक्तेः सुभावे रुत्वे 'अतो रोरप्लुतात्' इत्युत्वे आद्गुणे उत्तरपदस्थविभक्तेरनेन आम्भावे अन्योऽन्यामिति रूपम् । आम्भावविरहे तु पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे पुंलिङ्गवदेव अन्योऽन्यमिति रूपम् । इयं ब्राह्मणी, अन्यां ब्राह्मणीं भोजयति । अन्या त्विमामित्येवं विनिमयेन ब्राह्मण्यौ भोजयत इत्यर्थः । इदं कुलङ्कर्तृ अन्यत्कुलं भोजयति, अन्यत्कुलङ्कर्तृ इदं कुलं इत्येवं विनिमयेन कुले भोजयत इत्यर्थः । अत्रान्यच्छब्दस्य नपुंसकलिङ्गस्य द्वित्वे पूर्वपदस्थायाः विभक्तेः सुभावे उत्तरपदस्थविभक्तेः आम्भावे अन्योऽन्यामिति रूपम् । आम्भावविरहे तु 'क्लीबे चादड्विरहः स्वमोः' इति वक्ष्यमाणतया पुंवत्त्वात् अदड्डादेशाभावे अन्योऽन्यमिति पुंवदेव रूपमिति बोध्यम् । एवं स्त्रीत्वे परामिति पदस्य द्वित्वे दळद्वयेऽपि पुंवत्त्वात् टापो निवृत्तौ पूर्वोत्तरपदस्थविभक्त्योः क्रमेण सुभावे आम्भावे च परस्परामिति रूपम् । आम्भावविरहे तु द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे परस्परमिति रूपम् । नपुंसकत्वे तु परमित्यस्य द्वित्वे पूर्वपदस्थविभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावे परस्परामिति रूपम् । आमभावे तु द्वित्वे पूर्वपदस्थविभक्तेः सुभावे परस्परम् इति रूपम् । इतरामित्यस्य द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ उत्तरपदस्थविभक्तेराम्भावे समासवत्त्वात् पूर्वपदस्थविभक्तेर्लुकि इतरेतरामिति रूपम् । आम्भावविरहे तु इतरेतरमिति रूपम् । नपुंसकस्य तु इतरच्छब्दस्य द्वित्वे पुंवत्त्वाददड्डादेशविरहे पूर्वपदस्थविभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावतदभावाभ्यां रूपद्वयम् । अत्र भाष्यादौ द्वितीयाविभक्त्यन्तस्योदाहरणादितरविभक्तिषु आम्भावो न भवतीति प्राचीनमतमाह । **अत्र केचिदिति** ॥ द्वितीयेतरविभक्तिषु आम्भावविरहेणेत्यर्थः । **पुंवदेवेति** ॥ आम्भावविरहे सति बहुळग्रहणात् पुंवत्त्वे टाबभावे प्रथमतृतीयादिविभक्तिषु पुंवदेव रूपम् । नपुंसकत्वे प्रथमतृतीयादिविभक्तिषु आम्भावविरहात् प्रथमैकवचनस्य इद पुंवदेव रूपमित्यर्थः । सिद्धान्तमाह । **अन्ये त्विति** ॥ **दिङ्मात्रत्वादिति** ॥ दिक्प्रदर्शनमात्रत्वादित्यर्थः । उपलक्षणत्वादिति यावत् । अथात्र बहुळग्रहणानुवृत्तेः प्रयोजनसिद्धान्तप्राचीनश्लोकमाह । **दलद्वये इति** ॥ स्त्रीलिङ्गेष्वन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति पूर्वोत्तरखण्डयोः पुंवत्त्वाट्टाब्निवृत्तिरित्यर्थः । यद्यपि इतरेतरमित्यत्र समासवत्त्वात्सर्वनाम्नो वृत्तिमात्रे इति पुंवत्त्वादेव पूर्वखण्डे टाबभावः सिद्धः, तथाप्युत्तरखण्डे टाबभावार्थम्बाहुळकाश्रयणमिति भावः । **क्लीबे**

तथाहि । अन्योऽन्यं परस्परमित्यत्र दलद्वयेऽपि टाप्प्राप्तः । न च 'सर्वनाम्नो वृत्तिमात्रे—' (वा) इति पुंवद्भावः । अन्यपरयोरसमासवद्भावात् । न च द्विर्वचनमेव वृत्तिः । 'यां यां प्रियः प्रैक्षत कातराक्षी सा सा' इत्यादावतिप्रसङ्गात् । 'अन्योऽन्यमितरेतरम्' इत्यत्र च 'अद्ड्डतरादिभ्यः–' (सू ३१५) इत्यद्ड् प्राप्तः । 'अन्योऽन्यसंसक्तमहस्त्रियामम्' 'अन्योऽन्याश्रयः,' 'परस्पराक्षिसादृश्यम्' 'अपरस्परैः' इत्यादौ सोर्लुक्च प्राप्तः । सर्वं बाहुलकबलेन समाधेयम् । प्रकृतवार्तिकभाष्योदाहरणम् 'स्त्रियाम्' (सू ४५३) इति सूत्रे 'अन्योऽन्यसंश्रयं त्वेतद्' इति भाष्यं चात्र प्रमाणमिति ।

**इति** ॥ अन्योऽन्यमित्यादौ अद्ड्डादेशविरहे इत्यर्थः । **समासे सोरिति** ॥ कृतद्वित्वस्य अन्येन समासे पूर्वखण्डस्थस्येत्यर्थः । **तथाहीति** ॥ यथेदं स्पष्टम्भवति तथा उदाहृत्य प्रदर्श्यते इत्यर्थः । ननु पूर्वदळे 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वेनैव टान्निवृत्तेः सिद्धत्वात् तद्विषये बहुळग्रहणं नादर्तव्यमित्याशङ्क्य निराकरोति । **न चेति** ॥ 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वस्यात्र न प्रसक्तिरित्यर्थः । कुत इत्यत आह । **अन्यपरयोरिति** ॥ 'समासवच्च बहुळम्' इति समासवत्त्वम् इतरशब्दमात्रविषयं, न त्वन्यपरशब्दविषयमिति प्रागुक्तमित्यर्थः । ननु मास्तु समासवत्त्वं, तथापि 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वं दुर्वारम् । द्विर्वचनस्य वृत्तित्वादित्याशङ्क्य निराकरोति । **नच द्विर्वचनमेव वृत्तिरिति** ॥ 'कृत्तद्धितसमासैकशेषसनाद्यन्ता धातुरूपाः पञ्च वृत्तयः' इति परिगणनादिति भावः । द्विर्वचनस्य वृत्त्यन्तर्भावे बाधकमाह । **यां यामिति** ॥ द्विर्वचनस्य वृत्त्यन्तर्भावे "यांयां प्रियः प्रैक्षत कातराक्षी सासा ह्रिया नम्रमुखी बभूव" इत्यत्र श्लोके यांयामित्यत्र सासेत्यत्र च 'सर्वनाम्नो वृत्तिमात्रे' इति पूर्वखण्डस्य पुंवत्त्वं स्यादित्यर्थः । क्लीबे चाद्ड्विरहः इत्यस्योदाहरति । **अन्योऽन्यमिति** ॥ ननु समासे सोरलुक् चेति कथम् । अन्यपरशब्दयोः समासवत्त्वाभावादित्याशङ्क्य कृतद्वित्वस्यान्येन समासे पूर्वखण्डस्थस्य सोरलुगिति तदर्थमभिप्रेत्य तथैवोदाहरति । **अन्योऽन्यसंसक्तमिति** ॥ अन्योऽन्येन संसक्तमिति तृतीयासमासः । अहश्च त्रियामा चेति समाहारद्वन्द्वः । अहश्च रात्रिश्च अन्योऽन्येन सयुक्तमित्यर्थः । **अन्योऽन्याश्रय इति** ॥ अन्योऽन्यस्य आश्रय इति षष्ठीसमासः । **परस्पराक्षिसादृश्यमिति** ॥ अक्ष्णा॰ सादृश्यमक्षिसादृश्यम् । परस्परस्याक्षिसादृश्यमिति विग्रहः । **अपरस्परैरिति** ॥ न परस्परे अपरस्परे तैरिति विग्रहे एषु कृतद्वित्वेषु समासावयवेषु पूर्वखण्डस्थस्य सुबादेशस्य सोर्लुक् प्राप्तः इत्यर्थः । सुभावविधानन्तु अन्योऽन्यमित्यादावसमासे चरितार्थमिति भावः । ननु बहुळग्रहणादेतत् समाधेयमित्यत्र किं प्रमाणमित्यत आह । **प्रकृतवार्तिकेति** ॥ स्त्रीनपुंसकयोरिति प्रकृतवार्तिके अन्योऽन्यमिमे ब्राह्मण्याविति, इतरेतरमिमे कुले इति चोदाहरणात् "दळद्वये टाबभावः क्लीबे चाद्ड्विरहः, स्वमोः" इति विज्ञायते । 'स्त्रियाम्' इति सूत्रे अन्योऽन्यसंश्रयं त्वेतदिति भाष्यप्रयोगात्

## २१४८ । अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् । (८-१-१३)

प्रियप्रियेण ददाति । प्रियेण वा । सुखसुखेन ददाति । सुखेन वा । द्विर्वचने कर्मधारयवद्भावात्सुपि लुकि तदेव वचनम् । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ।

## २१४९ । यथास्वे यथायथम् । (८-१-१४)

'यथास्वम्' इति वीप्सायामव्ययीभावः । योऽयमात्मा यच्चात्मीयं तद्यथास्वम् । तस्मिन्यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा ।

## २१५० । द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । (८-१-१५)

द्विशब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु । तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम् । इतरे विषयभूताः ।

समासे सारलुंगात विज्ञायत इत्यथः । **अकृच्छ्र** ॥ कृच्छ्रं कष्टम् । अकृच्छ्रम् अनायासः । तस्मिन्वर्तमानयोः प्रिय, सुख, इत्यनयोः द्वे वा स्तः । **कर्मधारयवद्भावादिति** ॥ 'कर्मधारयवदुत्तरेषु' इत्यधिकारादिति भावः । 'समासवच्च बहुलम्' इत्यतः समासवदित्यनुवृत्तिस्तु न शङ्क्या । तस्य वार्तिकस्थत्वात् । एवञ्च प्रियेणेत्यस्य सुखेनेत्यस्य च द्वित्वे सति कर्मधारयवत्त्वात् सुपोस्तृतीयैकवचनयोर्लुकि पुनः समुदायात् तृतीयैकवचनमिति फलितम् । **यथास्वे यथायथम्** ॥ **वीप्सायामिति** ॥ कात्स्न्र्येन सम्बन्धो वीप्सेत्युक्तम् । स्वशब्दार्थगतकात्स्न्र्ये द्योत्ये यथाशब्दस्य स्वशब्देनाव्ययीभाव इत्यर्थः । कृत्स्नश्चासौ स्वश्चेत्यस्वपदविग्रहः । नित्यसमासत्वात् । स्वशब्दस्तु आत्मात्मीयज्ञातिधनवाची । इह तु आत्मात्मीयवाच्येव गृह्यते । नतु ज्ञातिधनवाची । व्याख्यानादित्यभिप्रेत्य विग्रहवाक्यस्य फलितमर्थमाह । **द्वे इति** ॥ स्त इति शेषः । निपातनादिति भावः । न च 'नित्यवीप्सयोः' इत्येव वीप्सया द्वित्वमिह सिद्धमिति शङ्क्यम् । द्वित्वविषयस्य शब्दस्य लक्षणया कात्स्न्र्यविशिष्टे वृत्तावेव वीप्सायाः द्विवचनविधानात् । अन्यथा सर्वो घटः इत्यादौ सर्वशब्दस्यापि द्वित्वापत्तेरिति भावः । **क्लीबत्वमिति** ॥ यथायथा इति समुदायस्येति शेषः । अन्यथा अव्ययत्वादलिङ्गत्वं स्यादिति भावः । एवञ्च कृतद्वित्वस्य नपुंसकह्रस्वत्वञ्च फलितम् । **यथायथं ज्ञातेति** ॥ अत्र ज्ञातेति तृन्नन्तम् । तद्योगे 'न लोक' इति षष्ठीनिषेधात्कर्मणि द्वितीया । तृजन्तत्वे तु यथायथस्य ज्ञातेत्येव । **द्वन्द्वं रहस्य** ॥ **पूर्वपदस्येति** ॥ द्वौ द्वाविति द्वित्वे कर्मधारयवत्त्वात् सुब्लुकि समुदायात् पुनः सुपि पूर्वपदावयवस्य इकारस्य अम् इति मकारान्तादेश इत्यर्थः । **अत्वमिति** ॥ उत्तरपदस्य अकारोऽन्तादेश इत्यर्थः । न च त्यदाद्यत्वमुत्तरपदान्तस्य

द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुरं ह्रीमे पशवो द्वन्द्वं मिथुनीयन्ति । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेणापि मर्यादीकृत्य । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः द्विवर्गसम्बन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं सङ्कर्षणवासुदेवौ । अभिव्यक्तौ साहचर्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्वम् इष्यते ॥

इति द्विरुक्तप्रकरणम् ।

॥ इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम् ॥

---

सिद्धमिति वाच्यम् । संज्ञात्वात्तदप्राप्तेरित्याहुः । **नपुंसकत्वं चेति** ॥ चकारः अनुक्तसमुच्चये । कृतद्वित्वस्य नपुंसकत्वं द्विवचनाभावश्चेत्यर्थः । **आचतुरं हीति** ॥ आङभिविधौ । 'आङ्मर्यादा' इत्यव्ययीभावः । शरत्प्रभृतित्वात् टच् । चतुर्थान्तमिति फलितोऽर्थः । पशवः स्वप्रभृति चतुर्थपर्यन्तं द्वन्द्वं मिथुनीयन्ति इत्यन्वयः । मिथुनशब्देन मैथुनं विवक्षितम् । मिथुनस्य कर्म मैथुनम् । तदिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यच् । फलितमर्थमाह । **मिथुनङ्गच्छतीति** ॥ मिथुनत्वं प्राप्नोतीत्यर्थः । मिथुनायन्ते इति क्यङ्पाठस्तु प्रामादिकः । **मर्यादीकृत्येति** ॥ स्वप्रभृति चतुरोऽभिव्याप्येत्यर्थः । अत्यन्तसहचरितत्वेन लोकविज्ञानाभिव्यक्तिरिति भाष्याल्लभ्यते । तदाह । **साहचर्येणेत्यर्थः इति** ॥ अत्र द्वन्द्वं न्यग्नीत्यत्र वीप्सायां द्वित्वम् । अन्यत्र स्वार्थे इति बोध्यम् । **अन्यत्रापीति** ॥ द्वन्द्वानि सहते इत्यादावित्यर्थः । शीतमुष्णञ्च एकद्वन्द्वम् । सुखं दुःखञ्चापरम् । क्षुत्तृष्णा चान्यत् । इह स्वार्थे द्वन्द्वः । अम्भावादि पूर्ववत् । 'चार्थे द्वन्द्वः' इति निपातनादन्यत्रापीति सिद्धम् ॥—इति द्विरुक्तप्रकरणम् ॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकारादिबहुगुणविराजमानप्रौढापरिमित
महाध्वरस्य श्रीशाहजी शरभजी तुक्कोजी भोसलचोळमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत
आनन्दरायविद्वत्सार्वभौमस्याध्वर्युणा पञ्चपुरुषीपोष्येण बाल्य एव तद्व्यानिर्वर्ति-
तापरिमिताग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामप्रमुखमखसन्तर्पितशतमख-
प्रमुखबर्हिर्मुखेन पदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाज-
पेययाजितो लब्धविद्यावैशद्येन अध्वरमीमांसाकुतूहलवृत्ति-
निर्माणप्रकटितसर्वतन्त्रस्वातन्त्र्येण बोधायनापस्तम्ब-
सत्याषाढभारद्वाजकात्यायनाश्वलायनद्राह्याय-
णादिकल्पसूत्रतद्भाष्यपारीणमहादेववाज-
पेययाजिसुतेन अन्नपूर्णाम्बागर्भजातेन
वासुदेवदीक्षितविदुषा विरचिता-
यां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमायां पूर्वार्धम्
॥ सम्पूर्णम् ॥

॥ श्रीरस्तु ॥

# ॥ अकाराद्यनुक्रमेण कौमुदीपूर्वार्धगतसूत्रसूचिका॥


| | सूत्रम् | पार्श्वम् | | सूत्रम् | पार्श्वम् |
|---|---|---|---|---|---|
| | अ | | ७९ | अचोऽन्त्यादि टि (१-१-६४) | ५८ |
| ११ | अ अ (८-४-६८) | १२ | ५९ | अचो रहाभ्यां द्वे (८-४-४६) | ४३ |
| १८६९ | अंशं हारी (५-२-६९) | ८७१ | २४७ | अच्च घेः (७-३-११९) | १५३ |
| ८५ | अकः सवर्णे दीर्घः (६-१-१०१) | ६१ | ७७० | अच्छ गत्यर्थवदेषु (१-४-६९) | ५२७ |
| ५३९ | अकथितं च (१-४-५१) | ४०३ | ९४३ | अच्प्रत्यन्ववपूर्वा० (५-४-७५) | ६१८ |
| ६०१ | अकर्तर्यृणे पञ्चमी (२-३-२४) | ४४२ | २००६ | अजादी गुणवच० (५-३-५८) | ९०५ |
| २१४८ | अकृच्छ्रे प्रियसु० (८-१-१३) | ९५४ | ४५४ | अजाद्यतष्टाप् (४-१-४) | ३३६ |
| ६२८ | अकेनोर्भविष्य० (२-३-७०) | ४५७ | ९०४ | अजाद्यदन्तम् (२-२-३३) | ५९३ |
| ६६४ | अक्षशलाकासं० (२-१-१०) | ४७८ | १६६९ | अजाविभ्यां थ्यन् (५-१-८) | ८१५ |
| ९४४ | अक्ष्णोऽदर्शनात् (५-४-७६) | ६१८ | २०३९ | अजिनान्तस्योत्त० (५-३-८२) | ९१६ |
| १६२१ | अगारान्ताट्ठन् (४-४-७०) | ८०६ | २०२८ | अज्ञाते (५-३-७३) | ९११ |
| ९२४ | अग्नेः स्तुत्स्तोम० (८-३-८२) | ६०४ | १९८० | अञ्चेर्लुक् (५-३-३०) | ८९९ |
| १२३६ | अग्नेर्ढक् (४-२-३३) | ७१७ | ८५६ | अञ्नासिकायाः० (५-४-११८) | ५७५ |
| ७९५ | अग्राख्यायामुरसः (५-४-९३) | ५३८ | १९७ | अट्कुप्वाङ्नुम्व्य० (८-४-२) | ११९ |
| ८८३ | अग्रान्तशुद्धशु० (५-४-१४५) | ५८४ | १४०६ | अणञौ च (४-३-३३) | ७६१ |
| २०० | अङ्गस्य (६-४-१) | १२१ | ११८० | अणो द्व्यचः (४-१-१५६) | ७०० |
| ८५३ | अङ्गुलेर्दारुणि (५-४-११४) | ५७४ | ११० | अणोऽप्रगृह्यस्या० (८-४-५७) | ७५ |
| २०६३ | अङ्गुल्यादिभ्यष्ठक् (५-३-१०८) | ९२२ | १५६८ | अण्कुटिलिकायाः (४-४-१८) | ७९६ |
| १४०४ | अच च (४-३-३१) | ७६१ | १९१० | अण्च (५-२-१०३) | ८८१ |
| ४१६ | अचः (६-४-१३८) | २८० | ११९८ | अणिञोरनार्षयो० (४-१-७८) | ७०५ |
| ५० | अचः परस्मिन्पू० (१-१-५७) | ३७ | १४ | अणुदित्सवर्णस्य० (१-१-६९) | १७ |
| ९४५ | अचतुरविचतुरसु० (५-४-७७) | ६१९ | १४५२ | अणृगयनादिभ्यः (४-३-७३) | ७७१ |
| ३५ | अचश्च (१-२-२८) | २६ | १५९८ | अण्महिष्यादिभ्यः (४-४-४८) | ८०२ |
| १२५६ | अचित्तहस्तिधे० (४-२-४७) | ७२३ | १०९५ | अत इञ् (४-१-९५) | ६७९ |
| १४७६ | अचित्तादेशका० (४-३-९६) | ७७५ | १९२२ | अत इनिठनौ (५-२-११५) | ८८४ |
| २९९ | अचि र ऋतः (७-२-१००) | १९५ | १६० | अतः कृकमिकंस० (८-३-४६) | ९८ |
| २७१ | अचि श्नुधातुभ्रु० (६-४-७७) | १६७ | ११९६ | अतश्च (४-१-१७७) | ७०५ |
| २५४ | अचो ञ्णिति (७-२-११५) | १५६ | २११३ | अतिग्रहाव्यथन० (५-४-४६) | ९३८ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| २०९४ | अतिथेर्ञ्यः (५-४-२६) | ९३३ |
| ५५६ | अतिरतिक्रमणे च (१-४-९५) | ४१८ |
| २००१ | अतिशायने तम० (५-३-५५) | ९०३ |
| ७९८ | अतः शुनः (५ ४ ९६) | ५३९ |
| १९१ | अतो गुणे (६-१-९७) | ११६ |
| २०३ | अतो भिस ऐस् (७-१-९) | १२२ |
| ३०९ | अतोऽम (७-१-२४) | २०७ |
| १६३ | अतो रोरप्लुता० (६-१-११३) | ९९ |
| ६९१ | अत्यन्तसंयोगे च (२-१-२९) | ४८९ |
| १३६ | अत्रानुनासिकः पू० (८-३-२) | ८६ |
| ११४७ | अत्रिभृगुकुत्सव० (२-४-६५) | ६९३ |
| ४२५ | अत्वसन्तस्य चा० (६-४-१४) | २८७ |
| ५३ | अदर्शनं लोपः (१-१-६०) | ६० |
| ४३७ | अदस औ सु० (७-२-१०७) | ३०० |
| १०१ | अदसो मात् (१-१-१२) | ७१ |
| ४१९ | अदसोऽसेर्दादु० (८-२-८०) | २८२ |
| १२८२ | अदूरभवश्च (४-२-७०) | ७३२ |
| १७ | अदेङ्गुणः (१-१-२) | २० |
| ७७१ | अदोऽनुपदेशे (१-४-७०) | ५२७ |
| ३१५ | अड्डतरादिभ्यः० (७-१-२५) | २०९ |
| १८१४ | अद्यश्वीनावष्टब्धे (५-२-१३) | ८५८ |
| १६१ | अधःशिरसी पदे (८-३-४७) | ९८ |
| १८७३ | अधिकम् (५-२-७३) | ८७२ |
| ६२६ | अधिकरणवाचिनश्च (२-३-६८) | ४५५ |
| ७०७ | अधिकरणवाचिना० (२-२-१३) | ४९९ |
| १९८९ | अधिकरणविचाले० (५-३-४३) | ९०० |
| ९१९ | अधिकरणैतावत्त्वे० (२-४-१५) | ६०२ |
| १४६७ | अधिकृत्य कृते० (४-३-८७) | ७७३ |
| ५५४ | अधिपरी अनर्थकौ (१-४-९३) | ४१७ |
| ६४४ | अधिरीश्वरे (१-४-९७) | ४६५ |
| ५४२ | अधिशीङ्स्थासां० (१-४-४६) | ४१२ |
| ६१३ | अधीगर्थदयेशां० (२-३-५२) | ४४८ |
| १९६६ | अधुना (५-३-१७) | ८९५ |
| ९०९ | अध्ययनतो० (२-४-५) | ५९६ |
| १६९३ | अध्यर्धपूर्वद्विगो० (५-१-२८) | ८२३ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| १८६० | अध्यायानुवाकयोः० (५-२-६०) | ८६९ |
| १६२२ | अध्यायिन्यदेशका० (४-४-७१) | ८०६ |
| १४४८ | अध्यायेष्वेवर्षेः (४-३-६९) | ७७० |
| १८१७ | अध्वनो यत्खौ (५-२-१६) | ८५८ |
| ९०८ | अध्वर्युक्रतुरनपुंसकम् (२-४-४) | ५९५ |
| ११५५ | अन् (६-४-१६७) | ६९४ |
| ४६२ | अन उपधालोपिनो० (४-१-२८) | ३४४ |
| २४८ | अनङ् सौ (७-१-९३) | १५३ |
| ४८ | अनचि च (८-४-४७) | ३५ |
| २०७६ | अनत्यन्तगतौ क्तात् (५-४-४) | ९२७ |
| ७७६ | अनत्याधान उरसि० (१-४-७५) | ५२८ |
| १९६९ | अनद्यतने र्हिल० (५-३-२१) | ८९६ |
| २०९१ | अनन्तावसथेतिह० (५-४-२३) | ९३२ |
| ५३६ | अनभिहिते (२-३-१) | ४०१ |
| ६७८ | अनश्च (५-४-१०८) | ४८५ |
| ३४६ | अनाप्यकः (७-२-११२) | २३३ |
| ४१५ | अनिदितां हल उप० (६-४-२४) | २८० |
| २०३१ | अनुकम्पायाम् (५-३-७६) | ९१२ |
| ७६३ | अनुकरणं चा० (१-४-६२) | ५२५ |
| १८७४ | अनुकाभिकाभीकः० (५-२-७४) | ८७२ |
| ९५१ | अनुगवमायामे (५-४-८३) | ६२२ |
| २०८३ | अनुगादिनष्ठक् (५-४-१३) | ९३० |
| १८१६ | अनुग्वलङ्गामी (५-२-१५) | ८५८ |
| ४०३ | अनुदात्तं सर्व० (८-१-१८) | २७३ |
| १२५३ | अनुदात्तादेरञ् (४-२-४४) | ७२२ |
| १५२० | अनुदात्तादेश्च (४-३-१४०) | ७८६ |
| १३७ | अनुनासिकात्परोऽनु० (८-३-४) | ८६ |
| १८१० | अनुपदसर्वान्ना० (५-२-९) | ८५६ |
| १८९० | अनुपद्यन्वेष्टा (५-२-९०) | ८७५ |
| ४६९ | अनुपसर्जनात् (४-१-१४) | ३५३ |
| ५७९ | अनुप्रतिगृणश्च (१-४-४१) | ४३० |
| १७७४ | अनुप्रवचनादि० (५-१-१११) | ८४५ |
| १२७२ | अनुब्राह्मणादिनिः (४-२-६२) | ७२८ |
| ६६९ | अनुर्यत्समया (२-१-१५) | ४८० |
| ५४७ | अनुर्लक्षणे (१-४-८४) | ४१४ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| ९०७ | अनुवादे चरणानाम् (२-४-३) | ५९५ |
| १४३८ | अनुशतिकादीनाञ्च (७-३-२०) | ७६८ |
| ९२४ | अनुस्वारस्य ययि० (८-४-५८) | ८१ |
| ११०६ | अनृष्यानन्तर्ये० (४-१-१०४) | ६८२ |
| ८३० | अनेकमन्यपदार्थे (२-२-२४) | ५५२ |
| ४५ | अनेकाल्शित्सर्वस्य (१-१-५५) | ३२ |
| ४६० | अनो बहुव्रीहेः (४-१-१२) | ३४३ |
| ७९६ | अनोश्मायस्सरसां०(५-४-९४) | ५३८ |
| १४३७ | अन्तःपूर्वपदाट्ठञ् (४-३-६०) | ७६७ |
| २२० | अन्तरं बहिर्योगोप०(१-१-३६) | १३५ |
| ७६६ | अन्तरपरिग्रहे (१-४-६५) | ५२६ |
| ५४५ | अन्तरान्तरेणयुक्ते (२-३-४) | ४१४ |
| ५९१ | अन्तर्धौ येनादर्शन०(१-४-२८) | ४३७ |
| ८५५ | अन्तर्बहिर्भ्यांश्च०(५-४-११७) | ५७५ |
| ४८९ | अन्तर्वत्पतिवतो० (४-१-३२) | ३६६ |
| ७५ | अन्तादिवच्च (६-१-८५) | ५५ |
| २०१४ | अन्तिकबाढयोर्नेद०(५-३-६३) | ९०६ |
| १६३७ | अन्नाण्णः (४-४-८५) | ८०९ |
| ६९६ | अन्नेन व्यञ्जनम् (२-१-३४) | ४९२ |
| ४९७ | अन्यतो ङीष् (४-१-४०) | ३७१ |
| ६७५ | अन्यपदार्थे च० (२-१-२१) | ४८३ |
| ५९५ | अन्यारादितरर्ते० (२-३-२९) | ४३९ |
| ९४९ | अन्ववतप्ताद्रहसः (५-४-८१) | ६२२ |
| १०८९ | अपत्यं पौत्र० (४-१-१६२) | ६७४ |
| ८१५ | अपथं नपुंसकम् (२-४-३०) | ५४७ |
| १३५९ | अपदातौ साल्वात(४-२-१३५) | ७५१ |
| २१० | अपदान्तस्य मूर्धन्यः(८-३-५५) | १२६ |
| ६६६ | अपपरिबहिरञ्चवः०(२-१-१२) | ४७९ |
| ५९६ | अपपरी वर्जने (१-४-८८) | ४४१ |
| १५७१ | अपमित्ययाचि० (४-४-२१) | ७९६ |
| १०५९ | अपरस्पराः०(६-१-१४४) | ६५९ |
| ४८० | अपरिमाणबि० (४-१-२२) | ३६१ |
| ५६३ | अपवर्गे तृतीया (२-३-६) | ४२२ |
| १०६४ | अपस्करो रथाङ्गं (६-१-१४९) | ६६० |
| २११२ | अपादाने चाहीय० (५-४-४५) | ९३७ |
| ५८७ | अपादाने पञ्चमी (२-३-२८) | ४३५ |
| ५५७ | अपिः पदार्थसं० (१-४-९६) | ४१८ |
| ११६३ | अपूर्वपदादन्यत०(४-१-१४०) | ६९६ |
| २५१ | अपृक्त एकाल्प्र० (१-२-४१) | १५४ |
| ७०० | अपेतापोढमुक्त० (२-१-३८) | ४९४ |
| १२२९ | अपोनप्त्रपान्नप्तृ० (४-२-२७) | ७१५ |
| ४४२ | अपो भि (७-४-४८) | ३०८ |
| २७७ | अप्तृन्तृच्स्वसृ० (६-४-११) | १७३ |
| ८३२ | अप्पूरणीप्रमाण्योः (५-४-११६) | ५५८ |
| ९८ | अप्लुतवदुपस्थिते (६-१-१२९) | ६९ |
| ४६७ | अभाषितपुंस्काच्च (७-३-४८) | ३५३ |
| १४७० | अभिजनश्च (४-३-९०) | ७७४ |
| २०७१ | अभिजिद्विदभृ० (५-३-११८) | ९२५ |
| ५४३ | अभिनिविशश्च (१-४-४७) | ४१२ |
| १४६६ | अभिनिष्क्रामति० (४-३-८६) | ७७३ |
| ५५३ | अभिरभागे (१-४-९१) | ४१७ |
| २१२४ | अभिविधौ संपदा०(५-४-५३) | ९४१ |
| १८१८ | अभ्यमित्राच्छ च (५-२-१७) | ८५९ |
| १४०३ | अमावास्याया वा (४-३-३०) | ७६१ |
| १९४ | अमि पूर्वः (६-१-१०७) | ११८ |
| ९७० | अमूर्धमस्तकात्० (६-३-१२) | ६२९ |
| ७८३ | अमैवाव्ययेन (२-२-२०) | ५३२ |
| २६७ | अम्बार्थनद्योर्ह्रस्वः (७-३-१०७) | १६५ |
| ३३३ | अम् सम्बुद्धौ (७-१-९९) | २२७ |
| १८७६ | अयःशूलदण्डा० (५-२-७६) | ८७२ |
| १३५३ | अरण्यान्मनुष्ये (४-२-१२९) | ७५० |
| २१२१ | अरुर्मनश्चक्षुश्चेतो० (५-४-५१) | ९४० |
| १७८ | अर्थवदधातुरप्र० (१-२-४५) | ११० |
| १०२६ | अर्थे विभाषा (६-३-१००) | ६४८ |
| ७१३ | अर्धं नपुंसकम् (२-२-२) | ५०३ |
| ८१३ | अर्धर्चाः पुंसि च (२-४-३१) | ५४७ |
| ८०२ | अर्धाच्च (५-४-१००) | ५४० |
| १६८४ | अर्धात्परिमाणस्य०(७-३-२६) | ८२१ |
| १३७४ | अर्धाद्यत् (४-३-४) | ७५४ |
| ३६४ | अर्वणस्त्रसावनञः (६-४-१२७) | २४८ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| १९३३ | अर्शआदिभ्योऽच् (५-२-१२७) | ८८८ |
| ९५८ | अलुगुत्तरपदे (६-३-१) | ६२५ |
| ४२ | अलोऽन्त्यस्य (१-१-५२) | ३१ |
| २४९ | अलोऽन्त्यात्पूर्व० (१-१-६५) | १५४ |
| ८७५ | अल्पाख्यायाम् (५-४-१३६) | ५८२ |
| ९०५ | अल्पाच्तरम् (२-२-३४) | ५९३ |
| २०४० | अल्पे (५-३-८५) | ९१६ |
| २३४ | अल्लोपोऽनः (६-४-१३४) | १४५ |
| १६०० | अवक्रयः (४-४-५०) | ८०२ |
| २०५० | अवक्षेपणे कन् (५-३-९५) | ९१८ |
| ८८ | अवङ् स्फोटायन० (६-१-१२३) | ६४ |
| १३९७ | अवयवादृतोः (७-३-११) | ७५९ |
| १५१५ | अवयवे च प्रा० (४-३-१३५) | ७८५ |
| १७४८ | अवयसि ठंश्च (५-१-८४) | ८३८ |
| ९४७ | अवसमन्धेभ्यस्त० (५-४-७९) | ६२१ |
| १८३१ | अवात्कुटारच्च (५-२-३०) | ८६२ |
| १८१२ | अवारपारात्यन्ता० (५-२-११) | ८५७ |
| १३४९ | अवृद्धादपि बहु० (४-२-१२५) | ७४९ |
| १११६ | अवृद्धाभ्यो नदी० (४-१-११३) | ६८५ |
| २०९६ | अवे कः (५-४-२८) | ९३३ |
| ८१ | अव्यक्तानुकरणस्या० (६-१-९८) | ६० |
| २१२८ | अव्यक्तानुकरणा० (५-४-५७) | ९४२ |
| ६५२ | अव्ययं विभक्तिस० (२-१-६) | ४७० |
| २०२६ | अव्ययसर्वनाम्ना० (५-३-७१) | ९१० |
| १३२४ | अव्ययात्त्यप् (४-२-१०४) | ७४३ |
| ४५२ | अव्ययादाप्सुपः (२-४-८२) | ३३२ |
| ६५१ | अव्ययीभावः (२-१-५) | ४७० |
| ४५१ | अव्ययीभावश्च (१-१-४१) | ३३२ |
| ६५९ | अव्ययीभावश्च (२-४-१८) | ४७३ |
| १४३६ | अव्ययीभावाच्च (४-३-५९) | ७६६ |
| ६६० | अव्ययीभावे चा० (६-३-८१) | ४७६ |
| ६७७ | अव्ययीभावे श० (५-४-१०७) | ४८३ |
| १४४३ | अशब्दे यत्खाव० (४-३-६४) | ७६९ |
| ८२७ | अशाला च (२-४-२४) | ५५१ |
| १०७४ | अश्वपत्यादिभ्यश्च (४-१-८४) | ६६४ |
| १८२० | अश्वस्यैकाहगमः (५-२-१९) | ८५९ |
| १११३ | अश्वादिभ्यः फञ् (४-१-११०) | ६८४ |
| २०७९ | अषडक्षाशितंग्वलं० (५-४-७) | ९२७ |
| १०२५ | अषष्ठ्यतृतीयास्थ० (६-३-९९) | ६४७ |
| ३७१ | अष्टन आ विभक्तौ (७-२-८४) | २५२ |
| १०४६ | अष्टनः संज्ञायां० (६-३-१२५) | ६५३ |
| ३७२ | अष्टाभ्य औश् (७-१-२१) | २५२ |
| १५२९ | असंज्ञायां तिल० (४-३-१४९) | ७८७ |
| १६८२ | असमासे निष्का० (५-१-२०) | ८२० |
| १३७९ | असांप्रतिके (४-३-९) | ७५४ |
| ७६९ | अस्तं च (१-४-६८) | ५२६ |
| १९७६ | अस्ताति च (५-३-४०) | ८९८ |
| १६१० | अस्तिनास्तिदिष्टं० (४-४-६०) | ८०३ |
| ३२२ | अस्थिदधिसक्थ्य० (७-१-७५) | २१६ |
| ८१८ | अस्मदो द्वयोश्च (१-२-५९) | ५४७ |
| १९२८ | अस्मायामेधास्र० (५-२-१२१) | ८८६ |
| २११८ | अस्य च्वौ (७-४-३२) | ९३९ |
| ५०९ | अस्वाङ्गपूर्वपदाद्वा (४-१-५३) | ३८२ |
| ७८७ | अहःसर्वैकदेशसं० (५-४-८७) | ५३४ |
| १९४६ | अहंशुभमोर्युस् (५-२-१४०) | ८९१ |
| ४४३ | अहन् (८-२-६८) | ३१४ |
| ७८९ | अह्नष्टखोरेव (६-४-१४५) | ५३५ |
| ७९१ | अह्नोऽदन्तात् (८-४-७) | ५३६ |
| ७९० | अह्नोऽह्न एतेभ्यः (५-४-८८) | ५३६ |
| | **आ** | |
| २३२ | आ कडारादेका संज्ञा (१-४-१) | १४४ |
| १५५७ | आकर्षात्ष्ठल् (४-४-९) | ७९४ |
| १८६४ | आकर्षादिभ्यः कन् (५-२-६४) | ८७० |
| १७७७ | आकालिकडाद्य० (५-१-११४) | ८४५ |
| १५८८ | आक्रन्दाट्ठञ्च (४-४-३८) | ८०० |
| ५९२ | आख्यातोपयोगे (१-४-२९) | ४३७ |
| १८१५ | आगवीनः (५-२-१४) | ८५८ |
| ११५२ | आगस्त्यकौण्डि० (२-४-७०) | ६९४ |
| १२२४ | आग्रहायण्यश्व० (४-२-२२) | ७१३ |
| २८९ | आङि चापः (७-३-१०५) | १८६ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| २४४ | आङो नाऽस्त्रियाम् (७-३-१२०) | १५२ |
| ६६७ | आङ्मर्यादाभि० (२-१-१३) | ४७९ |
| ५९७ | आङ्मर्यादाव० (१-४-८९) | ४४१ |
| १४७ | आङ्माङोश्च (६-१-७४) | ९२ |
| १७८२ | आ च त्वात् (५-१-१२०) | ८४७ |
| ४४५ | आच्छीनद्योर्नुम् (७-१-८०) | ३२४ |
| ९६२ | आज्ञायिनि च (६-३-५) | ६२६ |
| २६९ | आटश्च (६-१-९०) | १६५ |
| १७१९ | आढकाचितपात्रा० (५-१-५३) | ८३० |
| २६८ | आण्नद्याः (७-३-११२) | १६५ |
| २४० | आतो धातोः (६-४-१४०) | १४९ |
| ९६३ | आत्मनश्च (६-३-६) | |
| १६७० | आत्मन्विश्वजनभोगो० (५-१-९) | ८१५ |
| १६७१ | आत्माध्वानौ खे (६-४-१६९) | ८१६ |
| १५१३ | आथर्वणिकस्येक० (४-३-१३३) | ७८४ |
| ७६४ | आदरानादरयोः० (१-४-६३) | ५२५ |
| ४६८ | आदाचार्याणाम् (७-३-४९) | ३५३ |
| २ | आदिरन्त्येन सहेता (१-१-७१) | ४ |
| ४४ | आदेः परस्य (१-१-५४) | ३१ |
| २१२ | आदेशप्रत्यययोः (८-३-५९) | २६ |
| ६९ | आद्गुणः (६-१-८७) | ४९ |
| ३४८ | आद्यन्तवदेकस्मिन् (१-१-२१) | २३४ |
| ३६ | आद्यन्तौ टकितौ (१-१-४६) | २७ |
| ६३२ | आधारोऽधिकरणम् (१-४-४५) | ४५९ |
| ९२१ | आनङृतो द्वन्द्वे (६-३-२५) | ६०२ |
| ८०७ | आन्महतः समा० (६-३-४६) | ५४१ |
| १०८२ | आपत्यस्य च त० (६-४-१५१) | ६६८ |
| ८९२ | आपोऽन्यतरस्याम् (७-४-१५) | ५८६ |
| १८०९ | आप्रपदं प्राप्नोति (५-२-८) | ८५६ |
| २१४५ | आबाधे च (८-१-१०) | ९४९ |
| ४१२ | आमन्त्रितं पूर्व० (८-१-७२) | २७७ |
| २१७ | आमि सर्वनाम्नः० (७-१-५२) | १२९ |
| ४७५ | आयनेयीनीयियः फ० (७-१-२) | ३५९ |
| ६३७ | आयुक्तकुशला० (२-३-४०) | ४६२ |
| १४७१ | आयुधजीविभ्य० (४-३-९१) | ७७४ |
| २०६७ | आयुधजीविसङ्घा० (५-३-११४) | ९२३ |
| १५६४ | आयुधाच्छ च (४-४-१४) | ७९५ |
| ११३६ | आरगुदीचाम् (४-१-१३०) | ६९० |
| १६८१ | आर्हादगोपुच्छ० (५-१-१९) | ८१९ |
| १९३१ | आलजाटचौ बहु० (५-२-१२५) | ८८७ |
| ५२९ | आवट्याच्च (४-१-७५) | ३९६ |
| १६२५ | आवसथात्ष्ठल् (४-४-७४) | ८०६ |
| ६१६ | आशिषि नाथः (२-३-५५) | ४४९ |
| १०६२ | आश्चर्यमनित्ये (६-१-१४७) | ६६० |
| १४२० | आश्वयुज्या वुञ् (४-३-४५) | ७६४ |
| १९०० | आसन्दीवदष्ठीवच्च० (८-२-१२) | ८७८ |
| ४३० | आ सर्वनाम्नः (६-३-९१) | २९१ |
| १०६१ | आस्पदं प्रतिष्ठा० (६-१-१४६) | ६६ |
| १९८६ | आहि च दूरे (५-३-३७) | ९० |
| | **इ** | |
| १०४५ | इकः काशे (६-३-१२३) | ६५३ |
| ३४ | इको गुणवृद्धी (१-१-३) | २६ |
| ३२० | इकोऽचि विभक्तौ (७-१-७३) | २१४ |
| ४७ | इको यणचि (६-१-७७) | ३४ |
| १०४३ | इको वहेऽपीलोः (६-३-१२१) | ६५३ |
| ९१ | इकोऽसवर्णे शाक० (६-१-१२७) | ६५ |
| ९९९ | इको ह्रस्वोऽङ्यो० (६-३-६१) | ६३८ |
| १७९६ | इगन्ताच्च लघुपू० (५-१-१३१) | ८५२ |
| ३२८ | इग्यणः संप्रसार० (१-१-४५) | २२४ |
| ८६६ | इच्कर्मव्यतिहारे (५-४-१२७) | ५८० |
| १०८५ | इञः प्राचाम् (२-४-६०) | ६६९ |
| १३३३ | इञश्च (४-२-११२) | ७४५ |
| १५३ | इणः षः (८-३-३९) | ९४ |
| २११ | इण्कोः (८-३-५७) | १२६ |
| १९६३ | इतराभ्योऽपि दृ० (५-३-१४) | ८९४ |
| ११२५ | इतश्चानिञः (४-१-१२२) | ६८८ |
| ३६६ | इतोऽत्सर्वनामस्थाने (७-१-८६) | २४९ |
| ५२० | इतो मनुष्यजातेः (४-१-६५) | ३९१ |
| ५६६ | इत्थंभूतलक्षणे (२-३-२१) | ४२६ |
| १०१८ | इदङ्किमोरीश्की (६-३-९०) | ६४६ |

| सूत्रम् | | पार्श्वम् |
| --- | --- | --- |
| १९४९ | इदम इश् (५-३-३) | ८९२ |
| १९७२ | इदमस्थमुः (५-३-२४) | ८९७ |
| ३५० | इदमोऽन्वादेशे० (२-४-३२) | २३५ |
| ३४३ | इदमो मः (७-२-१०८) | २३२ |
| १९६५ | इदमो र्हिल् (५-३-१६) | ८९५ |
| १९५८ | इदमो हः (५-३-११) | ८९४ |
| १५५ | इदुदुपधस्य चाप्र० (८-३-४१) | ९५ |
| २९७ | इदुद्भ्याम् (७-३-११७) | १९४ |
| ३४४ | इदोऽय् पुंसि (७-२-१११) | २३२ |
| १७०३ | इद्गोण्याः (१-२-५०) | ८२६ |
| ९२५ | इद्वृद्धौ (६-३-२८) | ६०४ |
| ८९० | इनः स्त्रियाम् (५-४-१५२) | ५८५ |
| १८३४ | इनच्पिटच्चिकचि च (५-२-३३) | ८६२ |
| १२४५ | इनण्यनपत्ये (६-४-१६४) | ७२० |
| १२६० | इनित्रकट्यचश्च (४-२-५१) | ७२४ |
| ५०५ | इन्द्रवरुणभवशर्व० (४-१-४९) | ३७९ |
| १८९३ | इन्द्रियमिन्द्रलिङ्ग० (५-२-९३) | ८७६ |
| ८९ | इन्द्रे च (६-१-१२४) | ६४ |
| ३५६ | इन्हन्पूषार्यम्णां शौ (६-४-१२) | २४१ |
| २०५१ | इवे प्रतिकृतौ (५-३-९६) | ९१९ |
| १००६ | इष्टकेषीकामालानां० (६-३-६५) | ६४१ |
| १८८८ | इष्टादिभ्यश्च (५-२-८८) | ८७५ |
| २०१८ | इष्ठस्य यिट् च (६-४-१५९) | ९०८ |
| १२२१ | इसुसुक्तान्तात्कः (७-३-५१) | ७१२ |
| १५८ | इसुसोः सामर्थ्ये (८-३-४४) | ९७ |


## ई


| | | |
| --- | --- | --- |
| ९२३ | ईदग्नेः सोमवरुणयोः (६-३-२७) | ६०३ |
| १०९ | ईदूतौ च सप्तम्यर्थे (१-१-१९) | ७४ |
| १०० | ईदूदेद्द्विवचनं प्रगृह्यं (१-१-११) | ७० |
| ८९४ | ईयसश्च (५-४-१५६) | ५८७ |
| ७५५ | ईषदकृता (२-२-७) | ५२१ |
| १०३५ | ईषदर्थे (६-३-१०५) | ६४८ |
| २०२२ | ईषदसमाप्तौ कल्प० (५-३-६७) | ९०९ |
| १०१ | ई३ चाक्रवर्मणस्य (६-१-१३०) | ७० |
| १६६२ | उगवादिभ्यो यत् (५-१-२) | ८१३ |
| ४५५ | उगितश्च (४-१-६) | ३२९ |
| ९८७ | उगितश्च (६-३-४५) | ६३५ |
| ३६१ | उगिदचां सर्वनाम० (७-१-७०) | २४४ |
| ५ | उच्चैरुदात्तः (१-२-२९) | ७ |
| १०६ | उञः (१-१-१७) | ७३ |
| १७० | उञि च पदे (८-३-२१) | १०३ |
| १५८२ | उञ्छति (४-४-३२) | ७९९ |
| १८८० | उत्क उन्मनाः (५-२-८०) | ८७३ |
| १३०९ | उत्करादिभ्यश्छः (४-२-९०) | ७३९ |
| ७९४ | उत्तमैकाभ्यां च (५-४-९०) | ५३७ |
| १७४१ | उत्तरपथेनाहृतं च (५-१-७७) | ८३७ |
| १३९६ | उत्तरपदस्य (७-३-१०) | ७५९ |
| ८०० | उत्तरमृगपूर्वाच्च (५-४-९८) | ५३९ |
| १९८७ | उत्तराच्च (५-३-३८) | ९०० |
| १९८३ | उत्तराधरदक्षिणा० (५-३-३४) | ८९९ |
| १०७८ | उत्सादिभ्योऽञ् (४-१-८६) | ६६६ |
| ४२० | उद ईत् (६-४-१३९) | २८४ |
| ११८ | उदः स्थास्तम्भोः (८-४-६१) | ७८ |
| ९९५ | उदकस्योदः० (६-३-५७) | ६३७ |
| १२८६ | उदक्च विपाशः (४-२-७४) | ७३३ |
| १९०१ | उदन्वानुदधौ च (८-२-१३) | ८७८ |
| १८६७ | उदराट्ठगाद्यूने (५-२-६७) | ८७१ |
| १२२० | उदश्वितोऽन्य० (४-२-१९) | ७१२ |
| ११८१ | उदीचां वृद्धादगो० (४-१-१५७) | ७०१ |
| ४६५ | उदीचामातः स्थाने (७-३-४६) | ३४८ |
| ११७७ | उदीचामिञ् (४-१-१५३) | ६९९ |
| १३३० | उदीच्यग्रामाच्च० (४-२-१०९) | ७४५ |
| ८८६ | उद्विभ्यां काकुदस्य (५-४-१४८) | ५८४ |
| ११५१ | उपकादिभ्योऽन्य० (२-४-६९) | ६९३ |
| १४१५ | उपजानूपकर्णो० (४-३-४०) | ७६४ |
| १४९५ | उपज्ञाते (४-३-११५) | ७८० |
| ८२४ | उपज्ञोपक्रमं तदा० (२-४-२१) | ५५० |
| ३ | उपदेशेऽजनुनासिक० (१-३-२) | ५ |

| सूत्रम् | | पार्श्वम् |
|---|---|---|
| ७८२ | उपपदमतिङ् (२-२ १९) | ५३१ |
| ८७६ | उपमानाच्च (५ ४-१३७) | ५८२ |
| ७९९ | उपमानादप्राणिषु (५-४-९७) | ५३९ |
| ७३४ | उपमानानि० (२ १ ५५) | ५१२ |
| ७३५ | उपमितं व्याघ्रादि० (२-१ ५६) | ५१३ |
| २१४२ | उपर्यध्यधसः० (८-१-७) | ९४७ |
| १९८१ | उपर्युपरिष्टात् (५-३ ३१) | ८९९ |
| १०४४ | उपसर्गस्य घञ्य०(६-३-१२२) | ६५३ |
| २२ | उपसर्गाः क्रियायोगे (१-४-५९) | ८५८ |
| ८५८ | उपसर्गाच्च (५-४-११९) | ५७६ |
| ९५३ | उपसर्गादध्वनः (५-४-८५) | ६२२ |
| ७४ | उपसर्गादृति धातौ (६ १-९१) | ५५ |
| ८५९ | उपसर्गाद्बहुळम् (८-४-२८) | ५७६ |
| ६५४ | उपसर्जनं पूर्वम् (२-२-३०) | ४७१ |
| ७७४ | उपाजेऽन्वाजे (१-४-७३) | ५२७ |
| १८३५ | उपाधिभ्यां त्यकन्ना०(५ २-३४) | ८६३ |
| ५४४ | उपान्वध्याङ्वसः (१-४-४८) | ४१२ |
| ५५१ | उपोऽधिके च (१-४ ८७) | ४१६ |
| १४१९ | उप्ते च (४-३-४४) | ७६४ |
| ६२४ | उभयप्राप्तौ कर्मणि (२-३ ६६) | ४५४ |
| १८४५ | उभादुदात्तो नित्यम् (५-२-४४) | ८६६ |
| ४२६ | उभे अभ्यस्तम् (६-१-५) | २८८ |
| १५३६ | उमोर्णयोर्वा (४-३ १५८) | ७८९ |
| ८८९ | उरः प्रभृतिभ्य.० (५-४ १५१) | ५८५ |
| ७० | उरण्रपरः (१-१-५१) | ५० |
| १६४६ | उरसोऽण्च (४ ४-९४) | ८११ |
| १४९४ | उरसो यच्च (४-३ ११४) | ७७९ |
| ९२८ | उषासोषसः (६ ३-३१) | ६०६ |
| १५३५ | उष्ट्राद्वुञ् (४-३ १५७) | ७८९ |
| | **ऊ** | |
| १०७ | ऊँ (१ १-१८) | ७३ |
| ४ | ऊकालोऽज्झ्रस्व० (१-२-२७) | ७ |
| ५२१ | ऊङुतः (४-१-६६) | ३९१ |
| ९४२ | ऊदनोर्देशे (६-३-९८) | ६१७ |
| ४८३ | ऊधसोऽनङ् (५-४-१३१) | ३६४ |
| ५२४ | ऊरूत्तरपदादौपम्ये (४-१-६९) | ३९३ |
| १९२९ | ऊर्णाया युस् (५-२-१२३) | ८८७ |
| ८६९ | ऊर्ध्वाद्विभाषा (५-४-१३०) | ५८० |
| ७६२ | ऊर्यादिच्विडाचश्च (१-४-६१) | ५२५ |
| १९१४ | ऊषसुषिमुष्क० (५-२-१०७) | ८८२ |
| | **ऋ** | |
| ९४० | ऋक्पूरब्धूः पथा०(५-४-७४) | ६१६ |
| ९९३ | ऋचः शे (६-३-५५) | ६३७ |
| २७९ | ऋत उत् (६-१-१११) | १७४ |
| १४५७ | ऋतष्ठञ् (४-३-७८) | ७७२ |
| २७५ | ऋतो ङिसर्वनाम०(७-३-११०) | १७३ |
| १५९९ | ऋतोऽञ् (४-४-४९) | ८०२ |
| १७६९ | ऋतोरण् (५-१-१०५) | ८४४ |
| ९८१ | ऋतो विद्यायोनि० (६-३-२३) | ६३२ |
| ९२ | ऋत्यकः (६-१-१२८) | ६६ |
| ३७३ | ऋत्विग्दधृक्स्रग्दि०(३-२-५९) | २५५ |
| २७६ | ऋदुशनस्पुरुदंसो० (७-१-९४) | १७३ |
| ३०६ | ऋन्नेभ्यो ङीप् (४-१-५) | २०३ |
| १६७६ | ऋषभोपानहाञ्ञ्यः (५-१-१४) | ८१८ |
| १११७ | ऋष्यन्धकवृष्णि०(४-१-११४) | ६८५ |
| | **ए** | |
| ६८ | एकः पूर्वपरयोः (६-१-८४) | ४९ |
| १९२५ | एकगोपूर्वाट्ठञ्० (५-२-११८) | ८८५ |
| १००० | एक तद्धिते च (६-३-६२) | ६३९ |
| १६३१ | एकधुराल्लुक्च (४-४-७९) | ८०८ |
| २१४४ | एकं बहुव्रीहिवत् (८-१-९) | ९४८ |
| १९२ | एकवचनं संबुद्धिः (२-३-४९) | ११७ |
| २९६ | एकवचनस्य च (७-१-३१) | २६८ |
| ६५५ | एकविभक्ति चापूर्व०(१-२-४४) | ४७१ |
| २०६४ | एकशालायाष्ठज०(५-३-१०९) | ९२२ |
| २०८७ | एकस्य सकृच्च (५-४-१९) | ९३१ |
| ९९७ | एकहलादौ पूरयि०(६-३-५९) | ६३८ |
| ३२६ | एकाचो बशो भष्०(८-२-३७) | २२२ |
| २०४९ | एकाच्च प्राचाम् (५-३-९४) | ९१७ |
| ३०७ | एकाजुत्तरपदे णः (८-४-१२) | २०४ |

| सूत्रम् | पार्श्वम् |
|---|---|
| १९९८ एकादाकिनिच्चास०(५-३-५२) | ९०२ |
| ८११ एकादिश्चैकस्य० (६-३-७६) | ५४४ |
| १९९० एकाद्धो ध्यमुञन्य०(५-३-४४) | ९०० |
| १०९३ एको गोत्रे (४-१-९३) | ६७६ |
| ८६ एङः पदान्तादति (६-१-१०९) | ६३ |
| ७८ एङि पररूपम् (६-१-९४) | ५८ |
| १३३८ एङ् प्राचां देशे (१-१-७५) | ७४६ |
| १९३ एङ्ह्रस्वात्सम्बुद्धेः (६-१-६९) | ११७ |
| ३२३ एच इग्घ्रस्वादेशे (१-१-४८) | २१९ |
| ६१ एचोऽयवायावः (६-१-७८) | ४४ |
| १५३७ एण्या ढञ् (४-३-१५९) | ७८९ |
| ४३८ एत ईद्बहुवचने (८-२-८१) | ३०१ |
| १७६ एतत्तदोः सुलोपो०(६-१-१३२) | १०८ |
| १९६२ एतदस्त्रतसोस्त्रतसौ०(२-४-३३) | ८९४ |
| १९५१ एतदोऽन् (५-३-५) | ८९२ |
| १०२३ एति संज्ञायामगात् (८-३ ९९) | ६०७ |
| १९५० एतेतौ रथोः (५-३ ४) | ८९२ |
| ७३ एत्येधत्यूठ्सु (६-१-८९) | ५१ |
| १९९२ एधाच्च (५-३-४६) | ९०१ |
| ६१० एनपा द्वितीया (२-३-३१) | ४४७ |
| १९८४ एनबन्यतरस्यां० (५-३-३५) | ८९९ |
| २७२ एरनेकाचोऽसंयोग०(६-४-८२) | १६७ |

ऐ

| सूत्रम् | पार्श्वम् |
|---|---|
| १७७६ ऐकागारिकट् चौरे (५-१-११३) | ८४५ |
| १३२६ ऐषमोह्यःश्वसो० (४-२-१०५) | ७४४ |

ओ

| सूत्रम् | पार्श्वम् |
|---|---|
| २८१ ओः सुपि (६-४-८३) | १७६ |
| १५७७ ओजःसहोऽम्भसा०(४-४ २७) | ७९७ |
| ९६० ओजःसहोऽम्भः० (६ ३-३) | ६२६ |
| १०४ ओत् (१-१ १५) | ७३ |
| १६९ ओतो गार्ग्यस्य (८-३-२०) | १०३ |
| ८० ओमाङोश्च (६-१-९५) | ६० |
| १२८३ ओरञ् (४-२-७१) | ७३२ |
| १५१९ ओरञ् (४-३ १३९) | ७८५ |
| ८४७ ओर्गुणः (६-४-१४६) | ५७२ |
| १३४३ ओर्देशे ठञ् (४-२-११९) | ७४८ |
| २१०५ ओषधेरजातौ (५-४-३७) | ९३५ |
| २०७ ओसि च (७-३-१०४) | १२४ |

औ

| सूत्रम् | पार्श्वम् |
|---|---|
| ११५९ औक्षमनपत्ये (६-४ १७३) | ६९५ |
| २८७ औङ आपः (७-१-१८) | १८५ |
| २५६ औत् (७-३-११८) | १५७ |
| २८५ औतोऽम्शसोः (६-१-९३) | १८२ |

क

| सूत्रम् | पार्श्वम् |
|---|---|
| १९४४ कंशंभ्यां बभयु०(५-२-१३८) | ८९० |
| १६९० कंसाट्टिठन् (५ १-२५) | ८२३ |
| १५४७ कंसीयपरशव्ययो०(४-३-१६८) | ७९१ |
| ८८४ ककुदस्यावस्थायां०(५-४-१४६) | ५८४ |
| १३५० कच्छाग्निवक्त्र० (४-२-१२६) | ७४९ |
| १३५७ कच्छादिभ्यश्च (४-२ १३३) | ७५० |
| १४८७ कठचरकाल्लुक् (४-३-१०७) | ७७८ |
| १६२३ कठिनान्तप्रस्तारसं०(४-४-७२) | ८०६ |
| १७३३ कडंकरदक्षिणाच्छ०(५-१-६९) | ८३५ |
| ७५१ कडाराः कर्मधारये (२ २-३८) | ५२० |
| ७६७ कणेमनसी श्रद्धा० (१-४-६६) | ५२६ |
| १३३२ कण्वादिभ्यो गोत्रे (४ २-१११) | ७४५ |
| ७४२ कतरकतमौ जाति०(२-१-६३) | ५१६ |
| १३१५ कत्र्यादिभ्यो ढकञ्(४-२-९५) | ७४१ |
| १६५४ कथादिभ्यष्ठक् (४-४-१०२) | ८१२ |
| १३६६ कन्थापलदनगर०(४-२-१४२) | ७५२ |
| १३२२ कन्थायाष्ठक् (४-२-१०२) | ७४३ |
| १११९ कन्यायाः कनीन०(४-१-११६) | ६८६ |
| १७९२ कपिज्ञात्योर्ढक् (५ १-१२७) | ८५१ |
| १११० कपिबोधादाङ्गिरसे (४-१-१०७) | ६८३ |
| १६६३ कम्बलाच्च संज्ञायाम् (५-१-३) | ८१४ |
| ११९४ कम्बोजाल्लुक् (४-१-१७५) | ७०४ |
| ६०४ करणे च स्तोकाल्प०(२-३-३३) | ४४४ |
| २०६५ कर्कलोहितादी०(५ ३-११०) | ९२३ |
| १४४४ कर्णललाटात्कबलं०(४-३-६५) | ७६९ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| १०३६ | कर्णे लक्षणस्यावि० (६-३-११५) | ६५० |
| ७१० | कर्तरि च (२-२-१६) | ५०० |
| ५३५ | कर्तुरीप्सिततमं० (१-४-४९) | ४०० |
| ५६१ | कर्तृकरणयोस्तृतीया (२-३-१८) | ४२१ |
| ६९४ | कर्तृकरणे कृता० (२-१-३२) | ४९१ |
| ६२३ | कर्तृकर्मणोः कृति (२-३-६५) | ४५२ |
| १७६७ | कर्मण उकञ् (५-१-१०३) | ८४३ |
| ५६९ | कर्मणा यमभिप्रैति० (१-४-३२) | ४२६ |
| १८३६ | कर्मणि घटोऽठच् (५-२-३५) | ८६३ |
| ७०८ | कर्मणि च (२-२-१४) | ४९९ |
| ५३७ | कर्मणि द्वितीया (२-३-२) | ४०१ |
| २१४६ | कर्मधारयवदुत्तरेषु (८-१-११) | ९४९ |
| १४९१ | कर्मन्दकृशाश्वा० (४-३-१११) | ७७९ |
| ५४८ | कर्मप्रवचनीययुक्ते (२-३-८) | ४१४ |
| ५४६ | कर्मप्रवचनीयाः (१-४-८३) | ४१४ |
| १७६४ | कर्मवेषाद्यत् (५-१-१००) | ८४३ |
| १६१४ | कर्माध्ययने वृत्तम् (४-४-६३) | ८०४ |
| १४८८ | कलापिनोऽण् (४-३-१०८) | ७७८ |
| १४८४ | कलापिवैशम्पाय० (४-३-१०४) | ७७७ |
| १४२३ | कलाप्यश्वत्थयव० (४-३-४८) | ७६५ |
| १२०९ | कलेर्ढक् (४-२-८) | ७१० |
| ११३१ | कल्याण्यादीना० (४-१-१२६) | ६८९ |
| १०३३ | कवं चोष्णे (६-३-१०७) | ६४९ |
| १४४ | कस्कादिषु च (८-३-४८) | ९१ |
| २०२७ | कस्य च दः (५-३-७२) | ९१० |
| १२२७ | कस्येत् (४-२-२५) | ७१५ |
| १९१८ | काण्डाण्डादीर० (५-२-१११) | ८८३ |
| ४८१ | काण्डान्तात्क्षेत्रे (४-१-२३) | ३६२ |
| १४३ | कानाम्रेडिते (८-३-१२) | ९० |
| १०३० | का पथ्यक्षयोः (६-३-१०४) | ६४८ |
| १३१९ | कापिश्याः ष्फक् (४-२-९९) | ७४२ |
| ५३४ | कारके (१-४-२३) | ४०० |
| ९६८ | कारनाम्नि च प्राचां० (६-३-१०) | ६२८ |
| १०७० | कारस्करो वृक्षः (६-१-१५६) | ६६१ |
| १००७ | कारे सत्यागदस्य (६-३-७०) | ६४१ |
| १६१३ | कार्मस्ताच्छील्ये (६-४-१७२) | ८०४ |
| १८८१ | कालप्रयोजनाद्रोगे (५-२-८१) | ८७३ |
| ६९० | कालाः (२-१-२८) | ४८९ |
| ७१६ | कालाः परिमाणिना (२-२-५) | ५०५ |
| २१०१ | कालाच्च (५-४-३३) | ९३५ |
| १३८१ | कालाट्ठञ् (४-३-११) | ७५५ |
| १७४२ | कालात् (५-१-७८) | ८३७ |
| १४१८ | कालात्साधुपुष्प्य० (४-३-४३) | ७६४ |
| १७७० | कालाद्यत् (५-१-१०७) | ८४४ |
| ५५८ | कालाध्वनोरत्यन्त० (२-३-५) | ४२० |
| १२३७ | कालेभ्यो भववत् (४-२-३४) | ७१७ |
| १२९९ | कालोपसर्जने च० (१-२-५७) | ७३६ |
| १४८३ | काश्यपकौशिका० (४-३-१०३) | ७७७ |
| १३४० | काश्यादिभ्य० (४-२-११६) | ७४७ |
| २०४५ | कासूगोणीभ्यां ष्टरच् (५-३-९०) | ९१७ |
| १०६९ | कास्तीराजस्तु० (६-१-१५५) | ६६१ |
| २०४७ | कियत्तदो निर्धार० (५-३-९२) | ९१७ |
| १९४८ | किंसर्वनामबहुभ्यो० (५-३-२) | ८९१ |
| ७४३ | किं क्षेपे (२-१-६४) | ५१६ |
| १०७३ | किति च (७-२-११८) | ६६४ |
| ३४२ | किमः कः (७-२-१०३) | २३२ |
| ९५५ | किमः क्षेपे (५-४-७०) | ६२४ |
| १८४२ | किमः सङ्ख्यापरि० (५-२-४१) | ८६५ |
| १९७३ | किमश्च (५-३-२५) | ८९७ |
| १८४१ | किमिदंभ्यां वो घः (५-२-४०) | ८६५ |
| २००४ | किमेत्तिङव्ययघा० (५-४-११) | ९०४ |
| १९५९ | किमोऽत् (५-३-१२) | ८९४ |
| १६०३ | किशरादिभ्यः ष्ठन् (४-४-५३) | ८०२ |
| ७६१ | कुगतिप्रादयः (२-२-१८) | ५२५ |
| २०४३ | कुटीशमीशुण्डा० (५-३-८८) | ९१६ |
| १९५४ | कु तिहोः (७-२-१०४) | ८९३ |
| २०४४ | कुत्वा डुपच् (५-३-८९) | ९१७ |
| ७३२ | कुत्सितानि कुत्सनैः (२-१-५३) | ५१२ |
| २०२९ | कुत्सिते (५-३-७४) | ९१२ |
| १४२ | कुप्वोः ≍क≍पौ च (८-३-३७) | ९० |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| १०५६ | कुमति च (८-४-१३) | ६५८ |
| ८०६ | कुमहद्भ्यामन्य० (५-४-१०५) | ५४१ |
| ७५२ | कुमार श्रमणादिभिः(२-१-७०) | ५२१ |
| १३०६ | कुमुदनडवेतसे० (४-२-८७) | ७३८ |
| ८७८ | कुम्भपदीषु च (५-४-१३९) | ५८३ |
| ११९० | कुरुनादिभ्यो ण्यः (४-१-१७२) | ७०३ |
| ११७५ | कुर्वादिभ्यो ण्यः (४-१-१५१) | ६९९ |
| १३१६ | कुलकुक्षिग्रीवाभ्यः०(४-२-९६) | ७४२ |
| ११३२ | कुलटाया वा (४-१-१२७) | ६८९ |
| ११६२ | कुलात्खः (४-१-१३९) | ६९६ |
| १४९८ | कुलालादिभ्यो० (४-३-११८) | ७८० |
| १७२१ | कुलिजाल्लुक्खौ च (५-१-५५) | ८३१ |
| १५५२ | कुलुत्थकोपधादण् (४-४-४) | ७९३ |
| १७८३ | कुल्माषादञ् (५-२-८३) | ८७४ |
| २०६० | कुशाग्राच्छः (५-३-१०५) | ९२१ |
| १५८१ | कुसीददशैकादशा०(४-४-३१) | ७९८ |
| १०५८ | कुस्तुम्बुरूणि० (६-१-१४३) | ६५९ |
| १३६९ | कृकणपर्णाद्भारद्वाजे(४-२-१४५) | ७५२ |
| ६१४ | कृञः प्रतियत्ने (२-३-५३) | ४४८ |
| २१२९ | कृञो द्वितीयतृतीय०(५-४-५८) | ९४३ |
| १४१३ | कृतलब्धक्रीत० (४-३-३८) | ७६३ |
| १४९६ | कृते ग्रन्थे (४-३-११६) | ७८० |
| १७९ | कृत्तद्धितसमासाश्च (१-२-४६) | १११ |
| ७४९ | कृत्यतुल्याख्या० (२-१-६८) | ५२० |
| ६२९ | कृत्यानां कर्तरि वा (२-३-७१) | ४५७ |
| ६९५ | कृत्यैरधिकार्थवचने (२-१-३३) | ४९२ |
| ७२० | कृत्यैर्ऋणे (२-१-४३) | ५०६ |
| ६२२ | कृत्वोर्थप्रयोगे का० (२-३-६४) | ४५१ |
| ३७४ | कृदतिङ् (३-१-९३) | २५६ |
| ४४९ | कृन्मेजन्तः (१-१-३९) | ३३२ |
| २११७ | कृभ्वस्तियोगे० (५-४-५०) | ९३९ |
| ११४४ | केकयमित्रयुप्रलयानां०(७-३-२) | ६९२ |
| ८३[illegible] | केऽणः (७-४-१३) | ५५९ |
| *१२४८ | केदाराद्यञ् च (४-२-४०) | ७२१ |
| ४८८ | केवलमामकभागधे०(४-१-३०) | ३६५ |
| १९१६ | केशाद्वोऽन्यतर० (५-२-१०९) | ८८२ |
| १२५७ | केशाश्वाभ्यां य० (४-२-४८) | ७२३ |
| १०२७ | कोः कत्तत्पुरुषेऽचि(६-३-१०१) | ६४८ |
| १२९१ | कोपधाच्च (४-२-७९) | ७३४ |
| १५१७ | कोपधाच्च (४-३-१३७) | ७८५ |
| १३५६ | कोपधादण् (४-२-१३२) | ७५० |
| १४१७ | कोशाड्ढञ् (४-३-४२) | ७६४ |
| १५१२ | कौपिञ्ज० (४-३-१३२) | ७८३ |
| १२१४ | कौमारापूर्ववचने (४-२-१३) | ७११ |
| ४७७ | कौरव्यमाण्डूकाभ्यां०(४-१-१९) | ३६० |
| ११७९ | कौसल्यकार्मार्या०(४-१-१५५) | ७०० |
| ६२५ | क्तस्य च वर्तमाने (२-३-६७) | ४५४ |
| ५०७ | क्तादल्पाख्यायाम् (४-१-५१) | ३८१ |
| ७०६ | क्तेन च पूजायाम् (२-२-१२) | ४९९ |
| ७३९ | क्तेन नञ्विशिष्टे० (२-१-६०) | ५१५ |
| ७२२ | क्तेनाहोरात्रावयवाः(२-१-४५) | ५०७ |
| ७८५ | क्त्वा च (२-२-२२) | ५३३ |
| ४५० | क्त्वातोसुन्कसुनः (१-१-४०) | ३३२ |
| ८३७ | क्यङ्मानिनोश्च (६-३-३६) | ५६५ |
| २११९ | क्यच्व्योश्च (६-४-१५२) | ९४० |
| १४४७ | क्रतुयज्ञेभ्यश्च (४-३-६८) | ७६९ |
| १२७० | क्रतूक्थादिसूत्रान्ता०(४-२-६०) | ७२६ |
| १२७१ | क्रमादिभ्यो वुन् (४-२-६१) | ७२८ |
| ६६ | क्रय्यस्तदर्थे (६-१-८२) | ४८ |
| ५८१ | क्रियार्थोपपदस्य० (२-३-१४) | ४३१ |
| १५३४ | क्रीतवत्परिमाणात् (४-३-१५६) | ७८८ |
| ५०६ | क्रीतात्करणपूर्वात् (४-१-५०) | ३८० |
| ५७५ | क्रुधद्रुहेर्ष्यासूयार्थां०(१-४-३७) | ४२८ |
| ५७६ | क्रुधद्रुहोरुपसृष्टयोः०(१-४-३८) | ४२९ |
| १२०० | क्रौड्यादिभ्यश्च (४-१-८०) | ७०७ |
| १९६० | क्वाति (७-२-१०५) | ८९४ |
| ३७७ | क्विन्प्रत्ययस्य कुः (८-२-६२) | २५६ |
| ११६१ | क्षत्राद्धः (४-१-१३८) | ६९६ |
| ६५ | क्षय्यजय्यौ शक्यार्थे(६-१-८१) | ४७ |
| १२२२ | क्षीराड्ढञ् (४-२-२०) | ७१३ |

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| ९१२ | क्षुद्रजन्तवः (२-४-८) | ५९७ |
| ११३७ | क्षुद्राभ्यो वा (४-१-१३१) | ६९० |
| १४९९ | क्षुद्राभ्रमरवटरपा०(४-३-११९) | ७८० |
| ७९२ | क्षुभ्नादिषु च (८-४-३९) | ५३६ |
| १८९२ | क्षेत्रियच्परक्षेत्रे चि०(५-२-९२) | ८७५ |
| ७२४ | क्षेपे (२-१-४७) | ५०७ |
| | **ख** | |
| १६३० | खः सर्वधुरात् (४-४-७८) | ८०८ |
| ६८८ | खट्वा क्षेपे (२-१-२६) | ४८९ |
| १२५४ | खण्डिकादिभ्यश्च (४-२-४५) | ७२३ |
| ७६ | खरवसानयोर्विसर्ज०(८-३-१५) | ५६ |
| १२१ | खरि च (८-४-५५) | ८० |
| १२५९ | खलगोरथात् (४-२-५०) | ७२३ |
| १६६८ | खलयवमाषतिलवृष०(५-१-७) | ८१५ |
| १६९८ | खार्या ईकन् (५-१-३३) | ८२४ |
| ८०३ | खार्याः प्राचाम् (५-४-१०१) | ५४० |
| २५५ | ख्यत्यात्परस्य (६-१-११२) | १५६ |
| | **ग** | |
| ५४० | गतिबुद्धिप्रत्यवसा०(१-४-५२) | ४०८ |
| २३ | गतिश्च (१-४-६०) | २१ |
| ५८५ | गत्यर्थकर्मणि द्वि० (२-३-१२) | ४३४ |
| ८७४ | गन्धस्येदुत्पूति० (५-४-१३५) | ५८१ |
| १४३५ | गम्भीराञ्ञ्यः (४-३-५८) | ७६७ |
| ११०७ | गर्गादिभ्यो यञ् (४-१-१०५) | ६८२ |
| १३६१ | गर्तोत्तरपदाच्छः (४-२-१३७) | ७५१ |
| ९१५ | गवाश्वप्रभृतीनि च (२-४-११) | ५९८ |
| ९६७ | गवियुधिभ्यां स्थिरः (८-३-९५) | ६२८ |
| १३६२ | गहादिभ्यश्च (४-२-१३८) | ७५१ |
| १९१७ | गाण्ड्यजगात्संज्ञा०(५-२-११०) | ८८३ |
| १२७५ | गाथिविदथिकेशि०(६-४-१६५) | ७२९ |
| ६८३ | गिरेश्च सेनकस्य (५-४-११२) | ४८६ |
| १६५५ | गुडादिभ्यष्ठञ् (४-४-१०३) | ८१२ |
| १७८८ | गुणवचनब्राह्मणा०(५-१-१२४) | ८४९ |
| ९७ | गुरोरनृतोऽनन्त्य० (८-२-८६) | ६९ |
| ११४३ | गृष्ट्यादिभ्यश्च (४-१-१३६) | ६९१ |
| १६४२ | गृहपतिना संयुक्ते० (४-४-९०) | ८१० |
| २८४ | गोतो णित् (७-१-९०) | १८२ |
| १४७९ | गोत्रक्षत्रियाख्ये० (४-३-९९) | ७७५ |
| १७९९ | गोत्रचरणाच्छ्ला०(५-१-१३४) | ८५३ |
| १५०६ | गोत्रचरणाद्वुञ् (४-३-१२६) | ७८२ |
| ११७१ | गोत्रस्त्रियाः कुत्स०(४-१-१४७) | ६९७ |
| १४५९ | गोत्रादङ्कवत् (४-३-८०) | ७७२ |
| १०९४ | गोत्राद्यून्यस्त्रियाम् (४-१-९४) | ६७८ |
| ११९९ | गोत्रावयवात् (४-१-७९) | ७०६ |
| १०९९ | गोत्रे कुञ्जादिभ्य० (४-१-९८) | ६८० |
| १०८१ | गोत्रेऽलुगचि (४-१-८९) | ६६७ |
| १२४६ | गोत्रोक्षोष्ट्रोरभ्रराज०(४-२-३९) | ७२० |
| १७०५ | गोद्व्यचोऽसङ्ख्या० (५-१-३९) | ८२७ |
| ११३५ | गोधाया ढ्रक् (४-१-१२९) | ६९० |
| १५३८ | गोपयसोर्यत् (४-३-१६०) | ७८९ |
| १५५४ | गोपुच्छाट्ठञ् (४-४-६) | ७९३ |
| १३६० | गोयवाग्वोश्च (४-२-१३६) | ७५१ |
| ७२९ | गोरतद्धितलुकि (५-४-९२) | ५१० |
| १५२५ | गोश्च पुरीषे (४-३-१४५) | ७८७ |
| १८६२ | गोषदादिभ्यो वुन् (५-२-६२) | ८७० |
| १८१९ | गोष्ठात्खञ्भूतपूर्वे (५-२-१८) | ८५९ |
| १०६० | गोष्पदं सेवितासे०(६-१-१४५) | ६५९ |
| ६५६ | गोस्त्रियोरुपसर्जनस्य (१-२-४८) | ४७१ |
| १०१० | ग्रन्थान्ताधिके च (६-३-७९) | ६४३ |
| ७९७ | ग्रामकौटाभ्यां च त०(५-४-९५) | ५३८ |
| १३७७ | ग्रामजनपदैकदेशा० (४-३-७) | ७५४ |
| १२५१ | ग्रामजनबन्धुभ्यस्तल्(४-२-४३) | ७२२ |
| १४४० | ग्रामात्पर्यनुपूर्वात् (४-३-६१) | ७६८ |
| १३१४ | ग्रामाद्यखञौ (४-२-९४) | ७४१ |
| ९३९ | ग्राम्यपशुसङ्घेष्वतरु०(१-२-७३) | ६११ |
| १४३४ | ग्रीवाभ्योऽण्च (४-३-५७) | ७६७ |
| १४२१ | ग्रीष्मवसन्तादन्य० (४-३-४६) | ७६५ |
| १४२४ | ग्रीष्मावरसमाद्वुञ् (४-३-४९) | ७६५ |
| | **घ** | |
| ९७५ | घकालतनेषु काल०(६-३-१७) | ६३० |

सूत्रम् पार्श्वम्

१२६७ घञः सास्यां क्रि० (४-२-५८) ७२५
२०३४ घनिलचौ च (५-३-७९) ९१३
९८५ घरूपकल्पप्चेलड्०(६-३-४३) ६३४
२४५ घेर्ङिति (७-३-१११) १५२

ङ

१३४ ङमो ह्रस्वादचि० (८-३-३२) ८५
२४६ ङसिङसोश्च (६-१-११०) १५३
२१६ ङसिङ्योः स्मा० (७-१-१५) १२९
४३ ङिच्च (१-१-५३) ३१
२९६ ङिति ह्रस्वश्च (१-४-६) १९३
३८२ ङेप्रथमयोरम् (७-१-२८) २६१
२७० ङेराम्नद्याम्नीभ्यः (७-३-११६) १६६
२०४ ङेर्यः (७-१-१३) १२२
१३० ङ्णोः कुक्टुक्शरि (८-३-२८) ८३
१००१ ङ्यापोः संज्ञाछन्द०(६-३-६३) ६३९
१८२ ङ्याप्प्रातिपदिकात् (४-१-१) ११२

च

११३४ चटकाया ऐरक् (४-१-१२८) ६९०
३३१ चतुरनडुहोरामुदात्तः(७-१-९८)२२५
६३१ चतुर्थी चाशिष्यायु०(२-३-७३) ४५८
६९८ चतुर्थी तदर्थार्थब०(२-१-३६) ४५३
५७० चतुर्थी सम्प्रदाने (२-३-१३) ४२६
७५३ चतुष्पादो गर्भिण्या (२-१-७१) ५२१
११४१ चतुष्पाद्भ्यो ढञ् (४-१-१३५) ६९१
१०१४ चरणे ब्रह्मचारिणि (६-३-८६) ६४४
१२५५ चरणेभ्यो धर्मवत् (४-२-४६) ७२३
१५५६ चरति (४-४-८) ७९४
१६७७ चर्मणोऽञ् (५-१-१५) ८१८
२० चादयोऽसत्त्वे (१-४-५७) २१
९०१ चार्थे द्वन्द्वः (२-२-२९) ५९१
१०४७ चितः कपि (६-३-१२७) ६५४
१७५५ चित्तवति नित्यम् (५-१-८९) ८४०
१८५ चुटू (१-३-७) ११६
१५७३ चूर्णादिनिः (४-४-२३) ७९७
३७८ चोः कुः (८-२-३०)

४१७ चौ (६-३-१३८) २८०
२१२० च्वौ च (७-४-२६) ९४०

१४८९ छगलिनो ढिनुक् (४-३-१०९) ७७८
१२३० छ च (४-२-२८) ७१५
१६९२ छत्रादिभ्यो णः (४-४-६२) ८०४
१६७५ छदिरुपधिबलेर्ढञ् (५-१-१३) ८१७
१८८९ छन्दसि परिपन्थि०(५-२-८९) ८७५
१६४५ छन्दसो निर्मिते (४-४-९३) ८११
१४५० छन्दसो यदणौ (४-३-७१) ७७०
१५०९ छन्दोगौक्थिक० (४-३-१२९) ७८३
१२७८ छन्दोब्राह्मणानि च०(४-२-६६) ७३१
८२५ छाया बाहुल्ये (२-४-२२) ५५०
१४६ छे च (६-१-७३) ९१
१७२९ छेदादिभ्यो नित्यम् (५-१-६४) ८३४

ज

३१२ जश्शसोः शिः (७-१-२०) २०८
४२८ जक्षित्यादयः षट् (६-१-६) २८९
१४३२ जङ्गलधेनुवलजा० (७-३-२५) ७६३
१३४८ जनपदतदवध्योश्च (४-२-१२४) ७४९
११८६ जनपदशब्दा० (४-१-१६८) ७०१
१४८० जनपदिनां जन० (४-३-१००) ७७६
१२९३ जनपदे लुप् (४-२-८१) ७३५
५९३ जनिकर्तुः प्रकृतिः (१-४-३०) ४३८
१५४४ जम्ब्वा वा (४-३-१६५) ७९०
८६४ जम्भा सुहरित० (५-४-१२५) ५७९
२२७ जराया जरसन्य०(७-२-१०१) १४१
२१४ जसः शी (७-१-१७) १२८
२४१ जसि च (७-३-१०९) १५१
१५३१ जातरूपेभ्यः प० (४-३-१५३) ७८७
२०३७ जातिनाम्नः कन् (५-३-८१) ९१५
९१० जातिरप्राणिनाम् (२-४-६) ५९६
५१८ जातेरस्त्रीविषयाद० (४-१-६३) ३८८
८४२ जातेश्च (६-३-४१) ५६८
२०८१ जात्यन्ताच्छ बन्धुनि (५-४-९) ९२९

| | सूत्रम् | पार्श्वम् |
|---|---|---|
| ८१७ | जात्याख्यायामे० (१-२-५८) | ५४७ |
| ५०० | जानपदकुण्ड० (४-१-४२) | ३७३ |
| ८७२ | जायाया निङ् (५-४-१३४) | ५८१ |
| ६१७ | जासिनिप्रहण० (२-३-५६) | ४४९ |
| १४४१ | जिह्वामूलाङ्गुलेश्छः (४-३-६२) | ७६८ |
| १०९० | जीवति तु वंश्ये० (४-१-१६३) | ६७४ |
| २०५४ | जीविकार्थे चापण्ये (५-३-९९) | ९२० |
| ७८० | जीविकोपनिषदा० (१-४-७९) | ५२९ |
| १४०९ | ज प्रोष्ठपदानाम् (७-३-१८) | ७६२ |
| ६१२ | ज्ञोऽविदर्थस्य करणे (२-३-५१) | ४४७ |
| २०११ | ज्य च (५-३-६१) | ९०६ |
| २०१२ | ज्यादादीयसः (६-४-१६०) | ९०६ |
| १०२१ | ज्योतिरायुषः स्तो० (८-३-८३) | ६४६ |
| १०१३ | ज्योतिर्जनपद० (६-३-८५) | ६४४ |
| १९२१ | ज्योत्स्नातमिस्रा० (५-२-११४) | ८८४ |
| | **झ** | |
| ६८२ | झयः (५-४-१११) | ४८६ |
| १८९८ | झयः (८-२-१०) | ८७७ |
| ११९ | झयो होऽन्यतरस्याम् (८-४-६२) | ७९ |
| ७१ | झरो झरि सवर्णे (८-४-६५) | ५० |
| ८४ | झलां जशोऽन्ते (८-२-३९) | ६१ |
| ५२ | झलां जश्झशि (८-४-५३) | ४० |
| | **ञ** | |
| १५३३ | ञितश्च तत्प्र० (४-३-१५५) | ७८८ |
| २०७२ | ञ्यादयस्तद्राजाः (५-३-११९) | ९२५ |
| | **ट** | |
| २०१ | टाङसिङसामिना० (७-१-१२) | १२१ |
| ४५८ | टाबृचि (४-१-९) | ३४२ |
| ४७० | टिड्ढाणञ्द्वयस० (४-१-१५) | ३५४ |
| ३१६ | टेः (६-४-१४३) | २०९ |
| १७८६ | टेः (६-४-१५५) | ८४८ |
| | **ठ** | |
| १३०३ | ठक्छौ च (४-२-८४) | ७३७ |
| १४५४ | ठगायस्थानेभ्यः (४-३-७५) | ७७१ |
| १२४९ | ठक्कवचिनश्च (४-२-४१) | ७२१ |
| ११७० | ठस्येकः (७-३-५०) | ६९७ |
| २०३५ | ठाजादावूर्ध्वं द्विती० (५-३-८३) | ९१३ |
| | **ड** | |
| १३१ | डः सि धुट् (८-३-२९) | ८४ |
| २५९ | डति च (१-१-२५) | १५९ |
| ४६१ | डाबुभाभ्यामन्य० (४-१-१३) | ३४३ |
| | **ढ** | |
| ११३९ | ढकि लोपः (४-१-१३३) | ६९१ |
| ११२२ | ढक्च मण्डूकात् (४-१-११९) | ६८७ |
| ११४२ | ढे लोपोऽकद्र्वाः (६-४-१४७) | ६९१ |
| १७४ | ढ्रलोपे पूर्वस्य० (६-३-१११) | १०६ |
| | **ण** | |
| १२७६ | ण्यक्षत्रियार्षञितो० (२-४-५८) | ७२९ |
| | **त** | |
| १४५३ | तत आगतः (४-३-७४) | ७७१ |
| ६८४ | तत्पुरुषः (२-१-२२) | ४८७ |
| ७४५ | तत्पुरुषः समाना० (१-२-४२) | ५१७ |
| ७८६ | तत्पुरुषस्याङ्गुलेः० (५-४-८६) | ५३४ |
| ९७२ | तत्पुरुषे कृति० (६-३-१४) | ६२९ |
| ८२२ | तत्पुरुषोऽनञ्कर्म० (२-४-१९) | ५५० |
| २०८९ | तत्प्रकृतवचने मयट् (५-४-२१) | ९३१ |
| १५७८ | तत्प्रत्यनुपूर्व० (४-४-२८) | ७९७ |
| ११३० | तत्प्रत्ययस्य च (७-३-२९) | ६८८ |
| ७२३ | तत्र (२-१-४६) | ५०७ |
| १८६३ | तत्र कुशलः पथः (५-२-६३) | ८७० |
| १७६० | तत्र च दीयते० (५-१-९६) | ८४२ |
| १३९३ | तत्र जातः (४-३-२५) | ७५८ |
| १७७९ | तत्र तस्येव (५-१-११६) | ८४६ |
| ८४६ | तत्र तेनेदमिति स० (२-२-२७) | ५७० |
| १६२० | तत्र नियुक्तः (४-४-६९) | ८०५ |
| १४२८ | तत्र भवः (४-३-५३) | ७६६ |
| १७०९ | तत्र विदित इति च (५-१-४३) | ८२८ |
| १६५० | तत्र साधुः (४-४-९८) | ८११ |
| १२९५ | तत्रोद्धृतममत्रेभ्यः (४-२-१४) | ७१३ |
| ७८१ | तत्रोपपदं सप्तमी० (३-१-९२) | ५३० |

